TRIVANDRUM SANSKRIT SERIES.

No. XLI.

# THE ADHYÂTMAPAṬALA

OF THE

# ÂPASTAMBADHARMA

with Vivaraṇa of

**SRÎ SANKARA BHAGAVATPÂDA**

EDITED BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts, Trivandrum.*

[illegible] SASTRI

[illegible]

[illegible]

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE

TRIVANDRUM

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS

1915

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ४१.

---

# अध्यात्मपटलम्

अथवा

## आपस्तम्बीयधर्मप्रथमप्रश्नाष्टमपटलं

## श्रीमच्छङ्करभगवत्पादप्रणीतविवरणोपेतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

म. गणपतिशास्त्रिणा

संशोधितम् ।

84, R. H. ROAD, MADRAS-4

तत्र

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

---

कोळम्बाब्दाः १०९०, क्रैस्ताब्दाः १९१५.

# PREFACE.

THIS commentary called Vivaraṇa on the Adhyâtmapatala of the Âpastamba-Dharma is one of the gems of the celebrated Sankara Bhagavatpâda's works. It is a matter of extreme gratification to me that an opportunity has been offered to me for publishing this hitherto unknown work, by which, it is hoped, the Trivandrum Sanskrit Series would distinguish itself.

The present edition is based on two manuscripts in Malayalam character. One is a palm-leaf manuscript almost correct but wanting in one folio. It was lent to me by Brahmasri Kumaraswami Namburipad of Chennassu Manakkal, and it is marked in the foot-notes as क. The other is a copy taken by Mr. Ranga Vadhyar of Kallidakurichi, from a manuscript belonging to Thekkemathom, Trichur. This copy is full of errors, and marked in the foot-notes as ख.

TRIVANDRUM.

T. GANAPATI SÂSTRÎ.

THE KUPPUSWAMI SASTRI
RESEARCH INSTITUTE
84. THIRU VI. KA. ROAD
MYLAPORE, MADRAS-4

# निवेदना ।

---

**श्रीमच्छङ्करभगवत्पादानां** कृतिरत्नेष्वन्यतममिदम् **आपस्तम्बधर्मान्तर्गताध्यात्मपटलविवरणं** नाम । अदृष्टचरेणाश्रुतचरेण चानेन रत्नेन **अनन्तशयनसंस्कृतग्रन्थावलिं** भूषयितुमवसरमलप्स्महीति वयमुच्चैश्चरितार्थाः स्मः ।

अस्य ग्रन्थस्य संशोधनाधारभूतौ द्वावादर्शौ । तत्रैकः क.संज्ञस्तालपत्रात्मको लुप्तैकपत्रः शुद्धप्रायः (चेन्नस् मनैक्कल्) **कुमारस्वामिनम्बूरि**महाशयेन दत्तः, अपरः ख. संज्ञः पत्रात्मकोऽशुद्धप्रायः **श्रीशिवपुर**दक्षिणमठीयादर्शात् प्रतिरूपितः (कलिडकुरिचि) **रङ्गोपाध्याय**महाशयेन वितीर्णः । द्वावप्येतौ केरलीयलिपी ।

अनन्तशयनम्. न. गणपतिशास्त्री.

॥ श्रीः ॥

# अध्यात्मपटलम्

अथवा

## आपस्तम्बीयधर्मप्रथमप्रश्नाष्टमपटलं

श्रीमच्छङ्करभगवत्पादप्रणीतविवरणोपेतम् ।

---

अध्यात्मिकान् योगाननुतिष्ठेन्न्यायसंहितानने-श्चारिकान् ॥ १ ॥

ओम् अथ 'अध्यात्मिकान् योगान्—' इत्या(द्य)ध्यात्मपटलस्य संक्षेपतो विवरणं प्रस्तूयते । किमिह प्रायश्चित्तप्रकरणे समाम्नानस्य प्रयोजनमिति । उच्यते । कर्मक्षयहेतुत्वसामान्यात् । †अनिष्टकर्मक्षयहेतूनि हि प्रायश्चित्तानि भवन्ति । सर्वं च कर्म वर्णाश्रमविहितमनिष्टमेव विवेकिनः, देहग्रहणहेतुत्वात् । तत्क्षयकारणं चात्मज्ञानं, प्रवृत्तिहेतुदोषनिवर्तकत्वात् । दोषाणां च निर्घाते आत्मज्ञानवतः पण्डितस्य धर्माधर्मक्षये क्षेमप्राप्तिरिह विवक्षितेत्यात्मज्ञानार्थमध्यात्मपटलमारभ्यते, कर्मक्षयहेतुत्वसामान्यात् । ननु वर्णाश्रमविहितानां कर्मणामफलहेतुत्वात् तत्क्षयो नेष्ट इति, न,

---

† इह बहुव्रीहिः । फलस्य च हेतुत्वं विवक्षितम् ।

G. P. T. 391. 500. 19-1 1915

"सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम्"
(२. २. २)

इत्यादिश्रवणात् । अपरिमितवचनात् क्षेमप्राप्तिरेवेति चेन्न, 'तत्परिवृत्तौ कर्मफलशेषेण—' इत्यादिश्रवणात् । गौतमे च—

"वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय—"

इत्यादिना संसारगमनमेव दर्शयति कर्मणां फलम् । सर्वाश्रमाणां हि दोषनिर्घातलक्षणानि समयपदानि विधिनानुतिष्ठन् सार्वगामी भवति, न तु स्वधर्मानुष्ठानात् । वक्ष्यति च— 'विधूय कविः—' (सू० ५)

"सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेद्" (२. २१. १३)

इत्यादि ।

"तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति"
(२. २१. २)

इति वचनात् क्षेमशब्दस्य चापवर्गार्थत्वात् सर्वाश्रमकर्मणां ज्ञानरहितानामेव फलार्थत्वं, ज्ञानसंयुक्तानि तु क्षेमप्रापकाणि, यथा विषदध्यादीनि मन्त्रशर्करादिसंयुक्तानि कार्यान्तरारम्भकाणि, तद्वदिति चेन्न, अनारभ्यत्वात् क्षेमप्राप्तेः । यदि हि क्षेमप्राप्तिः कार्या स्यात्, तत इदं चिन्त्यं—किं केवलैः कर्मभिरारभ्या ज्ञानसहितैर्वा ज्ञानकर्मभ्यां वा केवलेन

ज्ञानेन कर्मासंयुक्तेन वेति । न त्वारभ्या केनचिदपि क्षेमप्राप्तिः नित्यत्वात् । अतोऽसदिदं ज्ञानसंयुक्तानि कर्माणि क्षेमप्राप्तिमारभन्त इति । ज्ञानसंयुक्तानां ज्ञानवदेव क्षेमप्राप्तिप्रतिबन्धापनयकर्तृत्वमिति चेन्न, सकार्यकारणानामेव कर्मणां क्षेमप्राप्तिप्रतिबन्धकत्वात् । अविद्यादोषहेतूनि हि सर्वकर्माणि सहफलैः कार्यभूतैः क्षेमप्राप्तिप्रतिबन्धकानि । तदभावमात्रमेव हि क्षेमप्राप्तिः । न च तदभाव आत्मज्ञानादन्यतः कुतश्चिदुपलभ्यते । तथाह्युक्तं—

"निर्हृत्य भूतदाहान् क्षेमं गच्छति पण्डितः" (सू० ११)

इति । पाण्डित्यं चेहात्मज्ञानं, प्रकृतत्वात् । श्रुतेश्च—

"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"

इति । अभयं हि क्षेमप्राप्तिः । 'अभयं वै जनक! प्राप्तोऽसि' इति श्रुत्यन्तरात् ।

"तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति"
(२. २१. २)

इत्याचार्यवचनमन्यार्थम् । कथं, यथोपदिष्टेष्वाश्रमधर्मेष्वव्यग्रो निष्कामः सन् प्रवर्तमानो ज्ञानेऽधिकृतो भवति, न यथेष्टं चेष्टन् कामकामी जायापुत्रवित्तादिकामापहृतव्यग्रचेताः । ज्ञानी च सन् सर्वसन्न्यासक्रमेण क्षेमं गच्छतीत्येषोऽर्थः । नहि दोषनिर्घातः कदाचिदपि कर्मभ्य उपपद्यते । समिथ्याज्ञानानां हि दोषाणां प्रवृत्तौ सत्यां प्राबल्यमिहोपलभ्यते । 'सङ्कल्पमूलः

कामः' इति च स्मृतेः। प्रवृत्तिमान्द्ये च दोषतनुत्वदर्शनात्। न चानिर्हृत्य समिथ्याज्ञानान् दोषान् क्षेमं प्राप्नोति कश्चित्। न च जन्मान्तरसञ्चितानां शुभकर्मणां विहितकर्मभ्यो निवृत्तिरुपपद्यते, शुद्धिसामान्ये विरोधाभावात्। सत्सु च तेषु तत्फलोपभोगाय शरीरग्रहणं, ततो धर्माधर्मप्रवृत्तरागद्वेषौ, पुनः शरीरग्रहणं चेति संसारः केन वार्यते। तस्मान्न कर्मभ्यः क्षेमप्राप्तिस्तत्प्रतिबन्धनिवृत्तिर्वा। कर्मसहिताज्ज्ञानादविद्यानिवृत्तिरिति चेत्। यद्यपि ज्ञानकर्मणोर्भिन्नकार्यत्वाद् विरोधः। तथापि तैलवर्त्यग्नीनामिव संहत्य कर्मणा ज्ञानमविद्यादि संसारकारणं निवर्तयतीति चेन्न। क्रियाकार(क)फलानुपमर्देनात्मलाभाभावात् ज्ञानस्य कर्मभिः संहतत्वानुपपत्तेः। तैलवर्त्यग्नीनां तु सहभावित्वोपपत्तेरितरेतरोपकार्योपकारकत्वोपपत्तेश्च संहतत्वं स्यात्। न तु ज्ञानकर्मणोस्तदुभयानुपपत्तेः संहतत्वं कदाचिदपि सम्भवति। केवलज्ञानपक्षे शास्त्रप्रतिषेधवचनादयुक्तमिति चेन्न। ज्ञानकार्यानिवर्तकत्वाच्छास्त्रप्रतिषेधवचनस्य। योऽयं कर्मविधिपरैः केवलज्ञानपक्षस्य सर्वसन्न्यासस्य विप्रतिषेधो विरोधः, स नैव ज्ञानकार्यमविद्यादोषक्षयं वारयति 'भिद्यते हृदयग्रन्थिः' 'तस्य तावदेव चिरं' 'मृत्युमुखात् प्रमुच्यते' इत्येवमादिश्रुतिस्मृतिशतसिद्धं, कर्मविधिपरत्वात् प्रवृत्तिशास्त्रस्य। न च (तद्) ज्ञानस्वरूपं ब्रह्मात्मैकत्वविषयं वारयति, सर्वोपनिषदामप्रामाण्यानर्थक्यप्रसङ्गात्, 'पूः प्राणिनः—' (सू० ४) 'आत्मा वै देवता' इत्यादिस्मृतीनां च। तस्माद्यद्यपि बहुभिः प्रवृत्तिशास्त्रैर्विप्रतिषिद्धं केवलज्ञानशास्त्रमात्मैकत्वविषयमल्पं, तथापि सकार्यस्य

ज्ञानस्य बलवत्तरत्वान्न केनचिद्वारयितुं शक्यम् । जीवतो दुःखानिवर्तकत्वाज्ज्ञानस्यानैकान्तिकं क्षेमप्रापकत्वमिति चेन्न, 'भिद्यते हृदयग्रन्थिः' 'ब्रह्मविदाप्नोति परं' 'निचाय्य तं मृत्युमुखात् प्रमुच्यते' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुतिस्मृतिन्यायेभ्यः । बहुभिर्विप्रतिषिद्धत्वात् सर्वत्यागशास्त्रस्य लोकवत् त्याज्यत्वमिति चेन्न, तुल्यप्रमाणत्वात्— मानसान्तानि सर्वाणि कर्माण्युक्त्वा

"तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयद्"

इति तपःशब्दवाच्यानां कर्मणामवरत्वेन संसारविषयत्वमुक्त्वा न्यासशब्दवाच्यस्य ज्ञानस्य केवलस्य 'न्यास एवात्यरेचयत्' 'त्यागेनैके अमृतत्वमानशुः' इत्यमृतत्वं फलं दर्शयति शास्त्रम्;

"तस्यैवं विदुषो यज्ञस्यात्मा यजमानः"

इत्यादिना च विदुषः सर्वक(र्म ? र्मा)भावं दर्शयति;

"द्वौ पन्थानावनुनिष्क्रान्ततरौ कर्मपथश्चैवं पुरस्तात् सन्न्यासश्च, तयोः सन्न्यास एवातिरेचयति"

इति च । विप्रतिषेधवचनस्य निन्दापरत्वादयुक्तमिति चेन्न । अविद्वद्विषयस्य कर्मणः स्तुत्यर्थत्वोपपत्तेः । मन्दबुद्धयो हि लोके दृष्टप्रयोजनाः प्ररोचनेन प्रवर्तयितव्याः । कर्मसु न दृष्टप्रयोजना विद्वांसः । परनिन्दा हि परस्तुतिरिति केवलज्ञाननिन्दया कर्मस्तुतिपरमाचार्यवचनम् । यत्त

THE KUPPUSWAMI SASTRI

"बुद्धे चेत् क्षेमप्रापणम्, इहैव न दुःखमुपलभेत"
(२. २१. १६)

इति ज्ञानस्य साधनत्वा(त् ?)नैकान्तिकवचनं, तद् 'ब्रह्मविदाप्नोति परम्' इत्यादिवाक्येभ्यः प्रत्युक्तम्; आचार्यान्तरवचनाच्च 'त्यज धर्ममधर्मं च' 'न तत्र क्रमते बुद्धिः' 'नैष्कर्म्यमाचरेत्' 'तस्मात् कर्म न कुर्वन्ति' इत्यादेः। तस्मात् केवलादेव ज्ञानात् क्षेमप्राप्तिः ॥

अ(था ?)ध्यात्मिकान् योगानिति। अध्यात्मं भवन्तीत्यध्यात्मिकाः। छान्दसं ह्रस्वत्वम्। के ते अध्यात्मिका योगाः। वक्ष्यमाणा अक्रोधादयः। ते हि चित्तसमाधानहेतुत्वाद् योगाः। बाह्यनिमित्तनिरपेक्षत्वाच्चाध्यात्मिकाः। तानध्यात्मिकान् योगान्। न्यायसंहितान् उपपत्तिसमन्वितान्। ते हि क्रोधादिषु दोषनिर्घातं प्रति समर्था उपपद्यन्ते न्यायतः। अनैश्चारिकान् निश्चारयन्ति मनोऽन्तःस्थं बहिर्विषयेभ्य इति नैश्चारिकाः क्रोधादयो दोषाः, तत्प्रतिपक्षभूता ह्येते तेऽनैश्चारिकाः। अक्रोधादिषु हि सत्सु चित्तमनिश्चरणस्वरूपं प्रसन्नमात्मावलम्बनं तिष्ठति। अतस्ताननुतिष्ठेत् सेवेत। अक्रोधादिलक्षणं चित्तसमाधानं कुर्यादित्यर्थः; तथा हि परः स्व आत्मा लभ्यते। क्रोधादिदोषापहृतचेतस्तया हि स्वोऽपि पर आत्माविज्ञातोऽलब्ध इव सर्वस्य यतः, अतस्तल्लाभाय योगानुष्ठानं कुर्यात् ॥ १ ॥

पुत्रवित्तादिलाभो हि परो दृष्टो लोके। किमात्मलाभेनेत्यत आह—

**आत्मलाभान्न परं विद्यते ॥ २ ॥**

आत्मलाभाद् आत्मनः परस्य स्वरूपप्रतिपत्तेः न परं लाभान्तरं विद्यते । तथा विचारितं बृहदारण्यके—'तदेतत् प्रेयः पुत्राद्' इत्यादिना ॥ २ ॥

**तत्रात्मलाभीयाञ्छ्लोकानुदाहरिष्यामः ॥ ३ ॥**

सत्यं क्रोधादयो दोषा आत्मलाभप्रतिबन्धभूता अक्रोधादिभिर्निर्ह(न्य?ण्य)न्ते; तथापि न मूलोद्वर्तनेन निवृत्तिः क्रोधादीनां; सर्वदोषबीजभूतमज्ञानं न निवृत्तमिति । तस्य चानिवृत्तौ बीजस्यानिवर्तितत्वात् सकृन्निवृत्ता अपि क्रोधादयो दोषाः पुनरुद्भविष्यन्तीति संसारस्यात्यन्तिकोच्छेदो न स्यात् । तद्दोषबीजभूतस्याज्ञानस्य ज्ञानादन्यतो न निवृत्तिरित्यात्मस्वरूपप्रकाशनायात्मज्ञानाय मतान्, शाखान्तरोपनिषद्भ्यः, तत्र तस्मिन् आत्मलाभप्रयोजने निमित्ते । आत्मानं करतलन्यस्तमिव ल(म्भि ? म्भयि)तुं समर्थान् आत्मलाभीयान् श्लोकानुदाहरिष्यामः उद्धृत्याहरिष्यामः । ग्रन्थीकृत्य दर्शयिष्याम इत्यर्थः ॥ ३ ॥

**पूः प्राणिनः सर्व एव गुहाशयस्या-**
**हन्यमानस्य विकल्मषस्य ।**
**अचलं चलनिकेतं येऽनुतिष्ठन्ति**
**तेऽमृताः ॥ ४ ॥**

पूः पुरं शरीरम् । प्राणिनः प्राणवन्तः । सर्व एव ब्रह्मादीनि स्तम्बपर्यन्तानि + प्राणिनः पुरं पुरमिव राज्ञः उप-

लब्ध्यधिष्ठानम् । कस्य पुरं, गुहाशयस्यात्मनः । यथा स्वकीये पुरे राजा सचिवादिपरिवृत उपलभ्यते, एवं देहेष्वात्मा बुद्ध्यादिकरणसंयुक्त उपलभ्यते । उपल(भ्य? भ)ते च बुद्ध्यादिकरणोपसंहृतान् भोगान् । अतोऽविद्यावरणात्मभूतायां बुद्धिगुहायां शेत इति गुहाशयः । तस्य पुरम् । तस्यां बुद्धावविद्यादिदोषमलापनये विद्वद्भिस्त्यक्तैषणैरुपलभ्यते। इदमपरं विशेषणं गुहाशयस्य अहन्यमानस्य, छेदनभेदनजरारोगादिभिर्हन्यमाने देहे न हन्यते । 'न वधेनास्य हन्यत' इतिच्छान्दोग्ये । तस्य विकल्मषस्य, कल्मषं पापं तदस्य नास्तीति विकल्मषः । सर्वं ह्यविद्यादोषसहितं धर्मा(धर्मा)ख्यं कर्म कल्मषं भवति, विकल्मषस्येति विशेषणेन तत् प्रतिषिध्यते; तत्कार्यं जरारोगादिदुःखरूपमहन्यमानस्येति । एवं हेतुफलसम्बन्धरहितस्यासंसारिण उपलब्ध्यधिष्ठानं पूः सर्वे प्राणिनः । अतो न संसार्यन्योऽस्ति। 'एको देवः सर्वभूतेषु गूढ' इति श्वेताश्वतरे ।

"एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते"

इति च काठके । 'नान्यदतोऽस्ति द्रष्टृ' इत्यादि वाजसनेयके । 'स आत्मा तत्त्वमसी'ति च छान्दोग्ये । पूर्वार्धेन ब्रह्मणो याथात्म्यमुक्त्वोत्तरार्धेन तद्विज्ञानवतस्तद्विज्ञानफलमाह—यस्य सर्वे प्राणिनः पुरं अहन्यमानस्य विकल्मषस्य, तस्य सर्वप्राणिसम्बन्धादर्थसिद्धमाकाशवत् सर्वगतत्वम्, 'आकाशवत् सर्वगतश्च नित्य' इति च श्रुतेः। सर्वगतस्य चाचलत्वमर्थसिद्धमेव । तमचलं चलनिकेतं चलायां हि प्राणिगुहायां स्वयं शेते तमचलं चलनिकेतम् । येऽनुतिष्ठन्ति ममात्मेति

साक्षात् प्रतिपद्यन्ते, तेऽमृताः अमर(ण)धर्माणो भवन्ति ॥ ४ ॥

कथं तदनुष्ठानमिति । उच्यते—

**यदिदमिदिहेदिह लोके विषयमुच्यते ।**
**विधूय कविरेतदनुतिष्ठेद् गुहाशयम् ॥ ५ ॥**

यदिदं प्रत्यक्षतोऽवगम्यमानं स्त्र्यन्नपानादिसंभोगलक्षणम् । इदिति किञ्चिदर्थे यत्किञ्चिदिदं प्रत्यक्षम् । इहास्मिन् लोके । विषयम् । इदंशब्दसामानाधिकरण्यान्नपुंसकलिङ्गप्रयोगो विषयमिति, लिङ्गव्यत्ययो वा द्रष्टव्यः । छान्दसो वा प्रयोगो विषयमिति । उभयलिङ्गो वा विषयशब्दः । द्वितीय इच्छब्द इहशब्दश्च । तयोः क्वचिन्नियोगः । इच्छब्दश्चार्थे । इहशब्दोऽमुष्मिन्नर्थे । लोकशब्दः काकाक्षिवदुभयत्र सम्बध्यते, इह लोके इह च लोकेऽमुष्मिंश्च यदिदं विषयमुच्यते, स्वर्गादिलोके पार्श्वस्थमध्यस्थो व्यपदिशाति इह लोक इति *च लोक इति, तत्सर्वं विधूय परित्यज्य । कविः क्रान्तदर्शी, मेधावीत्यर्थः । फलं साधनं चैतद्विधूय एषणात्रयाद् व्युत्थायेत्यर्थः । अनुतिष्ठेद् गुहाशयं यथोक्तलक्षणमात्मतत्त्वम् ॥ ५ ॥

तत् क्वानुष्ठातव्यमिति । उच्यते—

**आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम् ।**
**अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया ।**
**महान्तं तेजस्कायं सर्वत्र निहितं प्रभुम् ॥ ६ ॥**

---

* चशब्दात् पूर्वम् 'इह' इति पाठ्यं भाति ।

आत्मन्नेव आत्मन्येव । प्रत्यगात्मा हि परमात्मा । सर्वं ह्यत्रानुष्ठेयम् । यदि देहादन्यत्रानुष्ठीयेत, सोऽनात्मा कल्पितः स्यात् । तस्माद् देहादिसङ्घात आत्मन्येव विधूय बाह्यासङ्गं गुहाशयमात्मतत्त्वमनुष्ठेयम् । किमन्येष्वननुष्ठेयमिति भगवतो मतम् । बाढम् । प्रथममेव नान्येष्वनुष्ठेयमात्मतत्त्वम् । कथं तर्हि ; सर्वप्रयत्नेनापि स्वदेहादिसङ्घाते यथोक्तमात्मतत्त्वं न लभेत, अथाहमन्येष्वादित्यादिषु प्रतीच्छामि अभिवाञ्छामि । साधुष्ठानं साधोः परमात्मनः उपलब्धिस्थानं, यत्र गुहाशयं ब्रह्मतत्त्वमनुष्ठेयम् । *अनपे (क्ष्य ? क्ष) तयान्यत् पुत्रवित्तलोकादिसुखं छित्त्वा निःस्पृहतया । न ह्यात्मानुष्ठानं बाह्यार्थाकाङ्क्षा च सह सम्भवतः । कस्मात् पुनरनेकान्यन्यानि हितप्रकाराण्यनपेक्ष्यात्मानुष्ठानमेव यत्नत आस्थीयत इत्यत आहाचार्यः—यथान्यान्यहितानि हितबुद्ध्या परिगृहीतानि, न तथैवमात्मसेवनम् । किं तर्हि (ए)तद् हितमेव । तस्मात् सेवस्वेति । किंविशिष्टश्चात्मा सेवितव्य इत्याह—महान्तम् अमितान्तम्, अनन्त(र)त्वादबाह्यत्वाच्च महानात्मा, तं महान्तम् । गुणैर्वोपाधिसहचारिभिर्महान्तं, बृंहणमिति यद्वत् । तेजस्कायं तेजःशरीरमित्यर्थः । चैतन्यात्मज्योतिःस्वरूपम् । तद्धि तेजसां तेजः । 'येन सूर्यस्तपति तेजसेद्धः' 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । सर्वत्र सर्वदेहेषु ब्रह्मादिस्तम्बपर्यन्तेषु । निहितं स्थितम् उपलब्धिस्व-

* निस्स्पृहतयेति व्याख्यानस्वरसाद् 'अनपेक्षतया' इति मूलपाठो विवरणाभिमत इव भाति । मुद्रितापस्तम्बधर्मप्रश्ने तु 'अनपेक्षया' इत्येव पाठोऽस्ति ।

रूपेणाभिव्यक्तमित्यर्थः । न हि ब्रह्मणोऽभिव्यक्तिनिमित्तत्वव्य-
तिरेकेण कस्यचिदाधारत्वसम्भवः । निराधारं हि ब्रह्म, सर्व-
गतत्वोपपत्तेः । प्रभुं प्रभवति सर्वानीश्वरान् प्रति । अचिन्त्य-
शक्तित्वात् । एवमाद्यनन्तगुणविशिष्टमात्मानं सेवस्वेति ॥ ६ ॥

**सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः ।**
**अनङ्गोऽशब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः ।**
**स सर्वं परमा काष्ठा स वैषुवतं स वैभाजनं**
**पुरम् ॥ ७ ॥**

विशिष्टमात्मानं सेवस्वेति क्रियापदमनुवर्तते । किं च सर्वभूतेषु ब्रह्मादिष्वनित्येषु यो नित्योऽविनाशी । विपश्चिन्मेधावी, सर्वज्ञ इत्यर्थः । अमृतोऽत एव, यो ह्यनित्योऽसर्वज्ञः स मर्त्यो दृष्टः; अयं तु तद्विपरीतत्वादमृतः । ध्रुवः अविचलः । निष्कम्पस्वभाव इत्यर्थः । अनङ्गः स्थूलशरीररहित इत्यर्थः । स्थूले हि शरीरे शिरआद्यङ्गानि सम्भवन्ति । अशरीर इति लिङ्गशरीरवर्जित इत्येतत् । अशब्दः नास्य शब्दगुणः सम्भवति । शब्दविद्धि सन् )अन्यथा शब्दात्मकः शब्दात्मकमेव विजानीयात् । न चैतदस्ति । अतोऽशब्दः । तथास्पर्शः आकाशवायुभूतद्वयगुणप्रतिषेधेन शब्दादयो गन्धावसानाः सर्वभूतगुणाः प्रतिषिद्धा वेदितव्याः । तत इदं सिद्धमाकाशादपि सूक्ष्मत्वम् । शब्दादिगुणबाहुल्याद्वाय्वादिषु स्थौल्यतारतम्यमुपलभ्यते । शब्दादिगुणाभावाद् निरतिशयसूक्ष्मत्वं सर्वगतत्वादि चाप्रतिबन्धेन धर्मजातं तर्केणापि शक्यं स्थापयितुम् ।

महान्, अत एव शुचिर्निरञ्जनः। अथवा शुचिः पावन इत्यर्थः। शुचि हि वस्तु पावनं दृष्टम्। यथा लोके वाय्वग्न्यादि। किञ्च य आत्मा प्रकृतः, स सर्वम्। 'इदं सर्वं यदयमात्मे'ति हि वाजसनेयके। न ह्यात्मव्यतिरेकेण किञ्चिन्निरूप्यमाणमुपपद्यते। अत एव परमा प्रकृष्टा। काष्ठा अवसानम्। 'सा काष्ठा सा परा गतिरि'ति काठके। संसारगतीनाम् अवसानं निष्ठा समाप्तिरित्यर्थः। स वैषुवतं मध्यं सर्वस्य, सर्वान्तरश्रुतेः। विषुवत्सु वा दिवाकीर्त्येषु मन्त्रेषु नित्यं प्रकाश्यं भवतीति वैषुवतः। स परमात्मा। ननु स सर्वं परमा काष्ठा स वैषुवतमित्युक्तम्। कस्मात् पुनस्तदात्मतत्त्वं विभक्तमुपलभ्यत इति। उच्यते। स परमात्मा वैभाजनं, विभक्तिर्विभजनं विवेकः आत्मनो यस्मिन् देहे क्रियते, तद्विभाजनमेव वैभाजनम्। आत्मनो विवेकोपलब्ध्यधिष्ठानं हि शरीरम्। तच्चानेकधाविभक्तम्। तदुपाध्यनुवर्तित्वाद् वैभाजनं सर्वथा शुद्धमेव सर्वैर्नोपलभ्यते, किं तर्हि विभक्तो विपरीतश्चोपलभ्यते ॥ ७ ॥

तं योऽनुतिष्ठेत् सर्वत्र
प्राध्वं चास्य सदाचरेत्।
दुर्दर्शं निपुणं युक्तो
यः पश्येत् स मोदेत विष्टपे[1] ॥ ८ ॥

अतस्तदुपाध्यनुवर्तिस्वभावदर्शनमविद्याख्यं हित्वा विद्या शास्त्रजनितदर्शनेन तं यथोक्तलक्षणमात्मानमनुतिष्ठेत्

१. 'प इति' इति मुद्रितकोशपाठः।

सर्वत्र सर्वस्मिन् काले । किञ्च न केवलमनुष्ठानमात्रमस्य । प्राध्वं बन्धनम् आत्मैकत्वरसप्रज्ञतां स्थिरां बाह्यैषणाव्यावृत्त-रूपां सर्वसन्न्यासलक्षणाम् । तद्धि बन्धनं विदुषो ब्रह्मणि । एवं हि बद्धो ब्रह्मणि संसाराभिमुखो नावर्तते । तस्माद् बन्धनं चास्य सदाचरेत् । तदनुष्ठानबन्धने सदाचरतः किं स्यादि-त्युच्यते — दुर्दर्शं दुःखेन ह्येषणात्यागादिना स दृश्यत इति दु-र्दर्शम् । निपुणं यस्माद्धि दुर्दर्शं तस्मान्निपुणम् । अत्यन्तकौश-लेन समाहितचेतसा युक्तो यः पश्येत् साक्षाद् उपलभेत अहमा-त्मेति, स मोदेत । एवं दृष्ट्वा हर्षमानन्दलक्षणं प्राप्नुयात् । विष्टपे विगतसन्तापलक्षणेऽस्मिन् ब्रह्मणीत्यर्थः ॥ ८ ॥

**आत्मन् पश्यन् सर्वभूतानि**
**न मुह्येच्चिन्तयन् कविः ।**
**आत्मानं चैव सर्वत्र यः पश्येत्**
**स वै ब्रह्मा नाकपृष्ठे विराजति ॥ ९ ॥**

किञ्च आत्मन् पश्यन् आत्मनि पश्यन् उपलभमानः । सर्वभूतानि सर्वाणि (भूतानि) । सर्वेषां भूतानाम् आत्मस्वरूप-तामेव पश्यन्नित्यर्थः । सर्वत्रात्मानं च परम् । न मुह्येद् मोहं न ग-च्छेत् । न ह्यात्मैकत्वदर्शिनो मोहावतारः; 'तत्र को मोह' इति च मन्त्रलिङ्गात् । कीदृग्विशिष्टमात्मदर्शनं मोहनिबर्हणमित्याह —चिन्तयन् उपसंहृतकरणः कविः मेधावी सन् ध्यायमानः । न शब्दजनितदर्शनमात्रेण मोहापगमः । सर्वभूतेष्वनुप्रविष्टमेकं संव्यवहारकाले यो हि युक्तः पश्येत्, स वै ब्रह्मा ब्राह्मणः ।

नाकपृष्ठे ‡सुकरागौ (?) ब्रह्मणि। विराजति विविधं दीप्यते ॥ ९ ॥

निपुणोऽणीयान् बिसोर्णाया यः सर्वमावृत्य
तिष्ठति ।

वर्षीयाँश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति ॥

स इन्द्रियैर्जगतोऽस्य ज्ञानाद-
न्योऽनन्यस्य ज्ञेयात् परमेष्ठी विभाजः ।
तस्मात् कायाः प्रभवन्ति सर्वे
स मूलं शाश्वतिकः स नित्यः ॥ १० ॥

किञ्च निपुणः सर्वविद् अणीयान् अणुतरो बिसोर्णायाः बिसतन्तोरपि । कोऽसौ, यः प्रकृत आत्मा सर्वं समस्तं जगद् आवृत्य संव्याप्य तिष्ठति । किञ्च वर्षीयान् वृद्धतरः स्थूलतरश्च पृथिव्याः । सर्वात्मको हि सः । ध्रुवः नित्यः सर्वं कृत्स्नमारभ्य संस्तम्भनं कृत्वा । तिष्ठति वर्तते । 'येन द्यौरुग्रा पृथिवी च §दृह्ला' इति मन्त्रलिङ्गात् । स सर्वेश्वरः सर्वज्ञः एको विज्ञेय इत्यर्थः । स परमात्मा इन्द्रियैर्जन्यते यज्ज्ञानं जगतोऽस्य, तस्माज्ज्ञानादन्यो विलक्षणः, लौकिकज्ञानादन्य इति विशेषणाज्ज्ञानात्मक इत्येतत् सिद्धम् । 'सत्यं ज्ञानमनन्तमि'ति च श्रुतेः । अस्य जगत इन्द्रियजन्यज्ञानादन्य इत्युक्तम् । अतश्च तद्व्यतिरिक्तं जगदिति प्राप्तम् । अतस्तन्मा भूदित्याह — अनन्यस्य अपृथग्भूतस्य जगतः, ज्ञेयाद् ज्ञातव्यात् परमार्थस्वरूपाद्वयात् परमेश्वराद् घटादेरिव मृदः । स च परमेष्ठी परमे प्रकृष्टे स्वे महिम्नि हृद्याकाशेऽवस्थातुं शीलमस्येति पर-

‡ 'सुखराशौ' इति पाठ्यं भाति । § दृह्ला दृढा ।

मेष्ठी । स्वयमेव विभाजः विभक्तो देवपितृमनुष्यादिना ज्ञातृज्ञेयज्ञानभेदेन च । यस्मात् स एव ज्ञेय आत्मा स्वतो विभजति जगदनेकधा । तस्मादेवात्मनः कायाः शरीराण्याकाशादिक्रमेण प्रभवन्ति सर्वे ब्रह्मादिलक्षणाः । अतो मूलं स जगतः

"यतो वा इमानि भूतानि जायन्ते"

इति श्रुतेः । अत एव स शाश्वतिकः । यो हि पृथिव्यादिविकारः, सोऽबादिक्रमेण विनश्येत्, परं मूलकारणमापद्यते, सोऽशाश्वतिकोऽनित्यः । अयं चात्मा परं मूलम् । न तस्याप्यन्यन्मूलमस्ति । यतो जातो विनश्येत्, मूलमापद्यते, ततस्तद्विलक्षणत्वाच्छाश्वतिकः शश्वदेकरूपः । अतो नित्यः एकत्वमहत्त्वमूलत्वेभ्यश्च ॥ १० ॥

एवं यथोक्तमात्मानं विदितवत आध्यात्मिका योगा न्यायसहिता अप्रतिबन्धेन भविष्यन्ति । मिथ्याप्रत्ययपूर्वका हि दोषाः । दोषनिमित्तश्च धर्माधर्मजनितः संसारः दोषनिवृत्तावत्यन्तं विनिवर्तत इत्येतमर्थं दर्शयिष्यन्नाह—

**दोषाणां तु निर्घातो योगमूल इह जीविते ।**
**निर्हृत्य भूतदाहान् क्षेमं गच्छति पण्डितः ॥ ११ ॥**

दोषाणां तु क्रोधादीनां निर्घातः विनाशः । योगा अक्रोधादयः, तन्मूलः तन्निमित्त इत्येतत् । अक्रोधादिषु हि सत्सु प्रतिद्वन्द्विनो दोषा दुर्बलत्वान्निर्हन्यन्ते । इह जीवित इति दोषप्रभवकर्मनिमित्तत्वाज्जीवितस्य देहधारणावसानो दोषव्यापार इत्येतद् दर्शयति । तत्प्रतिपक्षेष्वक्रोधादिषु कथन्नु नाम

१ 'हीयान्' इति मुद्रितकोशपाठः ।

मुमुक्षवः प्रयत्नातिशयं कुर्युरिति । योगदोषयोरितरेतरविरोधित्वे सति स्थितिगतिवद् योगेभ्यो दोषाणामेव निर्घातः, न पु(न)र्विपर्यय इत्येतत् कथमिति चेदुच्यते । सम्यग्दर्शनसचिवत्वाद् बलवन्तो योगाः । मिथ्याप्रत्ययसचिवत्वाद् दुर्बलत्वान्निर्हन्यन्ते । निहन्तीत्येतदप्युक्तम् (?) । बुद्धिबलवद्भ्यस्तद्धीनानां लोके निर्घातो दृष्टः । 'अक्रोधनः' (१. १. २३) 'क्रोधादींश्च—' (१. ११. २५) इति लिङ्गात् । निर्हृत्य अपहृत्य । भूतदाहान् दोषेषु(न?)ह्युद्भूतेषु भूतानि दह्यन्त इव अग्निना परितप्यन्ते । अतो भूतदाहा दोषा उच्यन्ते, तान् निर्हृत्य । क्षेमं निर्भयं मोक्षं गच्छति ।

"आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन"

'अभयं वै जनक ! प्राप्तोऽसि', 'न भवति विदुषां ततो भयम्' इत्यादिश्रुतिस्मृतिभ्यः । न 'दोषप्रशममात्रेणाब्रह्मविदः क्षेमप्राप्तिरित्याह—पण्डित इति । ब्रह्मविदि ह्यत्र पण्डितशब्दः प्रयुक्तो, न शास्त्रविदि ।

"तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य"

इति श्रुतेः, इहात्मविद्याधिकारात् ।

यदि तर्हि दोषनिर्हरणं पण्डितोऽप्यपेक्षेत, तं प्रति न हि ब्रह्मविद्या क्षेमप्राप्तिनिमित्तम् । यदि ब्रह्मविद्यैव क्षेमप्राप्तिनिमित्तं, ब्रह्मविद्यानन्तरमेव न दुःखमुपलभेत । नैष दोषः । उक्तो ह्यत्र परिहारः—सम्यग्ज्ञानबलावष्टम्भाद् बलिनो योगा दुर्बलान् दोषान् मिथ्याप्रत्ययभवान् निहन्तुमलमिति । तस्माद् ब्रह्मविद्यैव क्षेमप्राप्तिः । अन्यथा दोषनिर्हरणकर्मक्षययोरसम्भवात् ।

विद्यया चेद् दोषनिर्हरणकर्मक्षयावश्यं भवतः, तत इद-

मयत्नकार्यत्वाद् दोषनिर्हरणस्य नित्यानुवादरूपमनर्थकं, निर्हत्ये- (त्या? ति,) न, प्रवृत्तकर्माक्षिप्तत्वाद् दोषाणाम् । द्विविधानि ह्यनेकजन्मान्तरकृतानि कर्माणि फलदानाय प्रवृत्तान्यप्रवृत्तानि च। यत्तु प्रवृत्तं कर्म, तेनाक्षिप्ता दोषाः कर्तुः सुखदुःखादिफलदानाय, दोषाभावे फलारम्भकत्वानुपपत्तेः । न हि रागद्वेषादिशून्ये सुखदुःखे प्रवृत्तिलब्धिः कदाचित् कस्यचिदिह दृश्यते । तस्मात् फलदानाय प्रवृत्तेन कर्मणाक्षिप्ता दोषाः प्रसङ्गेन प्राप्तबला यत्नतो निर्हर्तव्याः । प्रवृत्त्याधिक्यहेतुत्वप्रसङ्गात् । अत एवेदमुक्तं—दोषाणां तु निर्घातो योगमूल इह जीविते इति। मन्दमध्यमोत्तमविद्यापेक्षत्वाच्च । ब्रह्मविदामपि न सर्वेषां समा ब्रह्मप्रतिपत्तिः, विवेकातिशयदर्शनात् कस्यचित् । 'एष ब्रह्मविदां वरिष्ठ' इति च श्रुतेः । 'सम्यग्दर्शनसम्पन्न' इति च स्मृतेः । मन्दमध्यमब्रह्मविदपेक्षया त्यागवैराग्येन्द्रियजयविधेरर्थवत्त्वम्, उत्तमब्रह्मविदां त्वर्थप्राप्तमेतत् सर्वमित्यनुवादमात्रम् । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तत' इति वचनाद्, गुणातीतलक्षणवचनेभ्यश्च । प्रवृत्तकर्माक्षिप्तदोषात् तज्जनितचेष्टाभ्यश्च भवति विदुषोऽपि देहान्तरोत्पत्तिरिति चेद्, मुक्तेषुवत् प्रवृत्तकर्माक्षिप्तत्वाद् विद्वद्दोषचेष्टानां प्रवृत्तकर्मोपभोगेनैवोपक्षीणशक्तित्वात् प्रयोजनान्तराभावाच्च न जन्मान्तरारम्भकत्वमुपपद्यते । यद्यप्रवृत्तं कर्म, ततः स्वावस्थमेव ब्रह्मविद्याहुताशनदग्धबीजशक्तित्वान्नालं जन्मान्तरारम्भाय, 'क्षीयन्ते चास्य कर्माणि', 'ज्ञानाग्निः सर्वकर्माणि' इत्यादिश्रुतिस्मृतिभ्यः । अतः सिद्धा पण्डितस्य दोषनिर्हरणात् क्षेमप्राप्तिः ॥ ११ ॥

**अथ भूतदाहीयान् दोषानुदाहरिष्यामः ॥ १२ ॥**

**क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः ॥ १३ ॥**

तत्र क्रोधस्ताडनाक्रोशनादिहेतुरन्तःकरणविक्षोभो गात्रस्वेदकम्पनादिलिङ्गः । हर्षस्तद्विपरीतोऽभीष्टलाभजनितो बाष्परोमाञ्चनादिलिङ्गः । रोषोऽनिष्टविषयो मानसो विक्रियाविशेषः । लोभः परद्रव्येप्सा स्वद्रव्याविनियोगस्तीर्थे । मोहः कार्याकार्याविवेकिता । दम्भ आत्मनो धार्मिकत्वप्रकाशनम् । द्रोहः परानिष्टचिकीर्षा । मृषोद्यम् अनृतवचनम् । अत्याशपरीवादौ अत्याशोऽतिमात्रमशनम् । परीवादोऽसमक्षं परदोषाभिधानम् । असूया परगुणेष्वक्षमा । काममन्यू । कामः स्त्रीव्यतिकराभिलाषः । मन्युस्तद्विघातकृत्सु द्वेषः । अनात्म्यम् अनात्मवत्ता । एष क्रोधादिरयोगः, असमाधानलक्षणो ह्येष चेतसो विक्षेपप्रकारः । तेषां योगमूलो निर्घातः ॥ १२ ॥ १३ ॥

के पुनस्ते योगा इति, उच्यते—

**अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंसं तुष्टिरिति सर्वाश्रमाणां समयपदानि । तान्यनुतिष्ठन् विधिना सार्वगामी भवति ॥ १४ ॥**

अक्रोधोऽहर्षः इत्येवमाद्या अयोगविपरीताः । अतस्ते समाधिलक्षणत्वाद् योगाः । संविभागः आत्मनो यात्रासाध-

नस्यार्थिभ्यः संविभजनम् । त्यागः दृष्टादृष्टेष्टभो(ष?)गानां शक्तितः परित्यजनं, तत्साधनानां च । आर्जवम् ऋजुता, अदुष्टाकलनपूर्विका वाङ्मनःकायानां प्रवृत्तिः । मार्दवं मृदुत्वम् । शमोऽन्तःकरणोपशमः । दमो बाह्यकरणोपशमः । इदमन्यद् योगलक्षणं संक्षेपत उच्यते — सर्वभूतैरविरोधो योगः, विरोधे हि भूतानां पीडा । तदभावेऽपीडा । स(ह?) एव सर्वभूतापीडालक्षणो योगः । आर्यम् आर्याणां भावः अक्षुद्रता । आनृशंसम् आनृशंस्यम् अक्रौर्यम् । तुष्टिः लब्धव्यस्यालाभेऽपि चेतसः प्रसन्नतयावस्थानं लाभ इव । सर्वभूताविरोधलक्षणाहिंसा परि(व?)व्राजकस्यैव सम्भवतीत्यार्यादीनां त्रयाणाम् अन्येषां चाविरुद्धानां सर्वाश्रमान् प्रति प्राप्तिरितीतिशब्दसामर्थ्याद्, इतिशब्दस्य च प्रकारवचनत्वादार्यादीनीत्थंप्रकाराणि सर्वाश्रमान् प्रति गमयति-सर्वाश्रमाणां समयपदानीति । समयस्थानानीत्येतत् । अवश्यानुष्ठेयानीत्यर्थः । तान्येतानि यथोक्तान्यनुतिष्ठन् विधिना सर्वगामी सर्वगमनशीलः, ज्ञानाभिव्यक्तिक्रमेण । भवति मुच्यत इत्यर्थः ॥ १४ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंस-
परिव्राजकाचार्यस्य श्रीशङ्करभगवतः
§कृतौ आपस्तम्बीये धर्मशास्त्रे
अध्यात्मपटलविवरणं
समाप्तम् ।

शुभं भूयात्

§ कृताविति जातावेकवचनम् । कृतिष्वित्यर्थः । तास्वन्यतमा हीयम् आपस्तम्बधर्मशास्त्रान्तर्गताध्यात्मपटलविवरणाख्या कृतिः ।

॥ श्रीः ॥

आपस्तम्बीयधर्मप्रथमप्रश्नाष्टमपटलम् ।

अध्यात्मिकान् योगाननुतिष्ठेन्न्यायसंहितानानैश्चारिकान् ॥ १ ॥

आत्मलाभान्न परं विद्यते ॥ २ ॥

तत्रात्मलाभीयाञ्छ्लोकानुदाहरिष्यामः ॥ ३ ॥

पूः प्राणिनः सर्व एव गुहाशयस्याहन्यमानस्य विकल्मषस्याचलं चलनिकेतं येऽनुतिष्ठन्ति तेऽमृताः ॥ ४ ॥

यदिदमिदिहेदिह लोके विषयमुच्यते विधूय कविरेतदनुतिष्ठेद् गुहाशयम् ॥ ५ ॥

आत्मन्नेवाहमलब्ध्वैतद्धितं सेवस्व नाहितम् । अथान्येषु प्रतीच्छामि साधुष्ठानमनपेक्षया । महान्तं तेजस्कायं सर्वत्र निहितं प्रभुम् ॥ ६ ॥

सर्वभूतेषु यो नित्यो विपश्चिदमृतो ध्रुवः । अनङ्गो-

ऽशब्दोऽशरीरोऽस्पर्शश्च महाञ्छुचिः। स सर्वं परमा काष्ठा स वैषुवतं स वैभाजनं पुरम् ॥ ७ ॥

तं योऽनुतिष्ठेत् सर्वत्र प्राध्वं चास्य सदाचरेत्। दुर्दर्शं निपुणं युक्तो यः पश्येत् स मोदेत विष्टपे ॥ ८ ॥

आत्मन् पश्यन् सर्वभूतानि न मुह्येच्चिन्तयन् कविः। आत्मानं चैव सर्वत्र यः पश्येत् स वै ब्रह्मा नाकपृष्ठे विराजति ॥ ९ ॥

निपुणोऽणीयान् बिसोर्णाया यः समावृत्य तिष्ठति। वर्षीयांश्च पृथिव्या ध्रुवः सर्वमावृत्य तिष्ठति। स इन्द्रियैर्जगतोऽस्य ज्ञानादन्योऽनन्यस्य ज्ञेयात् परमेष्ठी विभाजः। तस्मात् कायाः प्रभवन्ति सर्वे समूलं शाश्वतिकः स नित्यः ॥ १० ॥

दोषाणां तु निर्घातो योगमूल इह जीविते। निर्हृत्य भूतदाहान् क्षेमं गच्छति पण्डितः ॥ ११ ॥

अथ भूतदाहीयान् दोषानुदाहरिष्यामः ॥ १२ ॥

क्रोधो हर्षो रोषो लोभो मोहो दम्भो द्रोहो मृषोद्यमत्याशपरीवादावसूया काममन्यू अनात्म्यमयोगस्तेषां योगमूलो निर्घातः ॥ १३ ॥

अक्रोधोऽहर्षोऽरोषोऽलोभोऽमोहोऽदम्भोऽद्रोहः सत्यवचनमनत्याशोऽपैशुनमनसूया संविभागस्त्याग आर्जवं मार्दवं शमो दमः सर्वभूतैरविरोधो योग आर्यमानृशंसं तुष्टिरिति सर्वाश्रमाणां समयपदानि । तान्यनुतिष्ठन् विधिना सार्वगामी भवति ॥ १४ ॥

इत्यापस्तम्बीयधर्मप्रथमप्रश्नाष्टमपटलम् ।

# APPENDIX II.

## आपस्तम्बीयाध्यात्मपटलविवरणे स्मृतानि ग्रन्थान्तरवाक्यानि ।

पृष्ठम्.

२. सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखम्

(आपस्तम्बधर्म० प्रश्न० २. ख० २. सू० २)

„ तत्परिवृत्तौ कर्मफलशेषेण ।

„ वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय

(गौतमसूत्रम्)

„ विधूय कविः (आपस्तम्बधर्म० प्रश्न० १. ख० २२. सू० ५)

„ सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् (आपस्तम्बधर्म० प्रश्न० २. ख० २१. सू० १३)

„ तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति

(आपस्तम्बधर्म० प्रश्न० २. ख० २१. सू० २)

३. निर्हृत्य भूतदाहान् क्षेमं गच्छति पण्डितः

(आपस्तम्बधर्म० प्रश्न० १. ख० २३. सू० ३)

„ आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन

(तैत्तिरीयोपनिषत्० वल्ली० २. अनु० ९)

„ अभयं वै जनक ! प्राप्तोऽसि

(बृहदारण्य० अध्याय० ४. ब्रा० २. वा० ४)

„ तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति

(आपस्तम्बधर्म० प्रश्न० २ ख० २१. सू० २)

„ सङ्कल्पमूलः कामः ।

४. भिद्यते हृदयग्रन्थिः (मुण्डक० २. ख० २. वा० ८)

„ तस्य तावदेव चिरं (छान्दोग्य० अध्या० ६. ख० १४. वा० २)

४. मृत्युमुखात् प्रमुच्यते (काठक० अध्या० १. वल्ली० ३. वा० १५)
„ पूः प्राणिनः (आपस्तम्बधर्म० प्रश्न० . ख० २२. सू० १४)
„ आत्मा वै देवता।
५. भिद्यते हृदयग्रन्थिः (मुण्डक० २. ख० २. वा० ८)
„ ब्रह्मविदाप्नोति परं (तैत्तिरीयोपनिषत्० वल्ली० २. अनु० १)
„ निचाय्य तं मृत्युमुखात् प्रमुच्यते
(काठक० अध्या० १. वल्ली० ३. वा० १५)
„ ब्रह्म वेद ब्रह्मैव भवति (मुण्डक० ३. ख० २. वा० ९)
„ तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्
(नारायण० ७८)
„ त्यागेनैके अमृतत्वमानशुः (नारायण० ३)
„ तस्यैवं विदुषो यज्ञस्यात्मा यजमानः (नारायण० ८०)
„ द्वौ पन्थानावनुनिष्क्रान्ततरौ कर्मपथश्चैवं पुरस्तात् संन्यासश्च, तयोः संन्यास एवातिरेचयति।
६ बुद्धे चेत क्षेमप्रापणम्। इहैव न दुःखमुपलभेत
आपस्तम्बधर्म० प्रश्न० २. ख० २१. सू० १६)
„ ब्रह्मविदाप्नोति परम (तैत्तिरीयोपनिषत० वल्ली० २. अनु० १)
„ त्यज धर्ममधर्मं च।
„ न तत्र क्रमते बुद्धिः।
„ नैष्कर्म्यमाचरेत।
„ तस्मात् कर्म न कुर्वन्ति।
७. तदेतत् प्रेयः पुत्रात् (बृहदारण्य० अ० १. ब्रा० ४. वा० ८)
८. न वधेनास्य हन्यते (छान्दोग्य० अध्या० ८. ख० १०. वा० ४)
„ एको देवः सर्वभूतेषु गूढः (श्वेताश्वतर० अध्या० ६. ११)
„ एष सर्वेषु भूतेषु गूढोऽत्मा न प्रकाशते
(काठक० अध्या० १. वल्ली० ३. वा० १२)
„ नान्यदतोऽस्ति द्रष्टृ (बृहदारण्य० अध्या० ३. ब्रा० ८. वा० ११)
„ स आत्मा तत्त्वमसि (छान्दोग्य० अध्या० ६. ख० ८. वा० ७)

८. आकाशवत् सर्वगतश्च नित्यः।

१०. येन सूर्यस्तपति तेजसेद्धः।

„ तस्य भासा सर्वमिदं विभाति (मुण्डक० २. ख० २. वा० १०)

११. इदं सर्वं यदयमात्मा (बृहदारण्य० अध्या० ४. ब्रा० ५. वा० ७)

„ सा काष्ठा सा परा गतिः

(काठक० अध्या० १. वल्ली० ३. वा० ११)

१२. तत्र को मोहः (ईशावास्य० म० ७)

१३. येन द्यौरुग्रा पृथिवी च दृढ्ला

(ऋग्वेद० अष्टक० ८. अध्या० ७. वर्ग० ३)

„ सत्यं ज्ञानमनन्तं (तैत्तिरीयोपनिषत्० वल्ली० २. वा० ३)

१४. यतो वा इमानि भूतानि जायन्ते

(तैत्तिरीयोपनिषत्० वल्ली० ३. वा० ७)

१५. अक्रोधनः (आपस्तम्बधर्म० प्रश्न० १. ख० ३. सू० २३)

„ क्रोधादींश्च (आपस्तम्बधर्म० प्रश्न० १. ख० ३१. सू० २५)

„ आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन

(तैत्तिरीयोपनिषत्० वल्ली० २. अनु० ९)

„ अभयं वै जनक! प्राप्तोऽसि

(बृहदार० अध्या० ४. ब्रा० २. वा० ४)

„ न भवति विदुषां ततो भयम्।

„ तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य

(बृहदारण्य० अध्या० ३. ब्रा० ५. वा० १)

„ एष ब्रह्मविदां वरिष्ठः (मुण्डक० ३. ख० १. वा० ४)

„ सम्यग्दर्शनसम्पन्नः।

„ रसोऽप्यस्य परं दृष्ट्वा निवर्तते

(भगवद्गीता० अध्या० २. श्लो० ५९)

„ क्षीयन्ते चास्य कर्माणि (मुण्डक० २. ख० २. वा० ८)

„ ज्ञानाग्निः सर्वकर्माणि (भगवद्गीता० अध्या० ४. श्लो० ३७)

THE KUPPUSWAMY SASTRI
RESEARCH INSTITUTE,
84. R. H ROAD, MADRAS-4.

# Ready for sale.

| | RS. | AS. | P. |
|---|---|---|---|
| भक्तिमञ्जरी (Stuti) by H. H. Svâti Srî Râma Varma Mahârâjah. | 1 | 0 | 0 |

## Trivandrum Sanskrit Series.

| | RS. | AS. | P. |
|---|---|---|---|
| No. 1 — दैवम् (Vyâkarana) by Deva with Purushakâra of Krishnalîlâsukamuni. | 1 | 0 | 0 |
| No. 2 — अभिनवकौस्तुभमाला - दक्षिणामूर्तिस्तवौ by Krishnalîlâsukamuni. | 0 | 2 | 0 |
| No. 3 — नलाभ्युदयः (Kâvya) by Vâmana Bhaṭṭa Bâṇa. | 0 | 4 | 0 |
| No. 4 — शिवलीलार्णवः (Kâvya) by Nîlakaṇṭha Dîkshita. | 2 | 0 | 0 |
| No. 5 — व्यक्तिविवेकः (Alankâra) by Mahima Bhaṭṭa with commentary. | 2 | 12 | 0 |
| No. 6 — दुर्घटवृत्तिः (Vyâkaraṇa) by Saraṇadeva. | 2 | 0 | 0 |
| No. 7 — ब्रह्मतत्त्वप्रकाशिका (Vedânta) by Sadâsivendra Sarasvatî. | 2 | 4 | 0 |
| No. 8 — प्रद्युम्नाभ्युदयम् (Nâṭaka) by Ravi Varma Bhûpa. | 1 | 0 | 0 |
| No. 9 — विरूपाक्षपञ्चाशिका (Vedânta) by Virûpâkshanâtha with the commentary of Vidyâchakravartin. | 0 | 8 | 0 |
| No. 10 — मातङ्गलीला (Gajalakshaṇa) by Nîlakaṇṭha. | 0 | 8 | 0 |
| No. 11 — तपतीसंवरणम् (Nâṭaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 4 | 0 |
| No. 12 — परमार्थसारम् (Vedânta) by Bhagavad Âdisesha with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 13 — सुभद्राधनञ्जयम् (Nâṭaka) by Kulasekhara Varma with the commentary of Sivarâma. | 2 | 0 | 0 |

| | | | |
|---|---|---|---|
| No. 14—नीतिसारः (Nîti) by Kâmandaka, with the commentary of Sankarârya. | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. | 2 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Do.) Do. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् (Do.) Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyaṇa Bhaṭṭa with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mímâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् (Do.) Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Arunagirinatha and Vivarana of Nârâyana Pandita (1 & 2 Sargas) | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः (Dharmasûtra) by Vikhanas | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (3rd Kânda) | 2 | 4 | 0 |
| No: 30—वास्तुविद्या (Silpa) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (4th, 5th, & 6th Kâṇḍas) | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Aruṇagirinâtha and Vivaraṇa of Nârâyaṇa Paṇḍita (3rd, 4th & 5th Sargas) | 2 | 8 | 0 |

No. 33—वाररुचसंग्रहः (Vyâkaraṇa) with the commentary Dîpaprabhâ of Nârâyaṇa 0 8 0

No. 34—मणिदर्पणः (शब्दपरिच्छेदः) (Nyâya) by Râjachûdâmaṇimakhin 1 4 0

No. 35—मणिसारः (अनुमानखण्डः) (Nyâya) by Gopînâtha 1 8 0

No. 36—कुमारसम्भवः (Kâvya) by Kâlidâsa with the two commentaries, Prakâsikâ of Aruṇagirinâtha and Vivaraṇa of Nârâyaṇa Paṇḍita (6th, 7th & 8th sargas) 3 0 0

No. 37—आशौचाष्टकम् (Smriti) by Vararuchi with the commentary 0 4 0

No. 38—नामलिङ्गानुशासनम् (Kosa) by Amarasimha with the commentary Tîkâsarvasva of Sarvânanda (1st Kânda) 2 0 0

No. 39—चारुदत्तम् (Nâṭaka) by Bhâsa 0 12 0

No. 40—अलङ्कारसूत्रम् (Alankâra) by Rajânaka Srî Ruyyaka with the Alankârasarvaswa of Srî Mankhuka and its commentary by Samudrabandha 2 8 0

No. 41—अध्यात्मपटलम् (Kalpa) by Âpastamba with Vivaraṇa of Srî Sankara Bhagavat Pada 0 4 0

***Apply to*—**

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*

